एकाग्रलक्षणस्य वा तपसः "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात्, तत्फलभूतविचारात्मकस्य वा तपसः "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतिप्रकटितस्य वा प्रभावात् सामर्थ्यादनन्तकोटिजन्मसूपासितस्य देवस्य प्रसादाच्च स्वातिरिक्तकलनापह्नवप्रबोधसमकालं स्वमात्रतया बृंहणात् ब्रह्म हशब्द ऐतिह्यार्थः। श्वेताश्वतरो नाम विद्वान् महर्षिः स्वेन यद्ब्रह्म स्वावशेषतया साक्षात्कृतं तदेव ब्रह्मयाथात्म्यं व्रतिकामिवनिकुटीचकबहूदकहंसाश्चाश्रमिणः तानतीत्य परमहंसाश्रमे ये वर्तन्ते ते खल्वत्याश्रमिणः परमहंसपरिव्राजकाः तेभ्यो हि अत्याश्रमिभ्यः यत् पूर्वोक्तं ब्रह्मयाथात्म्यं तदेव परमं निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रगोचरं पवित्रं स्वविद्याद्वयापवित्रशोधकं वसिष्ठागस्त्यवामदेवश्रीशुकोद्दालकवीतहव्यसनकादिमहर्षिसङ्घेन जुष्टं सेवितं ब्रह्ममात्रज्ञानं प्रोवाच, यथा ब्रह्ममात्रं स्वावशेषतया साक्षात्कृतं भवेत् तथा प्रोवाच ॥ २१ ॥ प्रशब्देन गुरोरुपदेशकालं दर्शयति—वेदान्त इति। वेदान्त इति जातावेकवचनम्। ईशावास्यादिमुक्तिकोपनिषदन्ताष्टोत्तरशतोपनिषत्सु परमं परमात्मतत्त्वं परमपुरुषार्थहेतुत्वात् गुह्यं पारमहंस्यं अनधिकारिषु गोपनीयत्वात् पुरा पूर्वस्मिन् कल्पे प्रचोदितं सम्यगनुशासितं, गुरुशिष्यसंप्रदायपरंपरया सम्यगागतमिति वा। कल्पादावीश्वरेण हिरण्यगर्भं प्रति यत् प्रचोदितं उपदिष्टं तदिदं ब्रह्ममात्रविज्ञानं नाप्रशान्ताय स्वातिरिक्तनिरासकब्रह्ममात्रज्ञानसाधनसाधनचतुष्टयसम्पत्तिविकलाय न कदाऽपि दातव्यम्। तत्रापि नापुत्राय अशिष्याय वा न दातव्यम्। प्रशान्तान्तरपुत्राय शिष्याय वा सम्यक् तच्छीलं परीक्ष्य दातव्यम् ॥ २२ ॥ देवतादेशिकभक्त्योर्विद्याप्राप्तावन्तरङ्गसाधनत्वमाह—यस्येति। यस्य मुमुक्षोः देवे परमेश्वरे परा निर्हेतुकी भक्तिः विद्यते यथा देवे तथा गुरावपि निर्हेतुकी भक्तिः यदि विद्यते तदा तस्य मुमुक्षोः गुरुदेवतयोरेकत्वं भावयतः अस्यां उपनिषदि श्वेताश्वतरेण मुनिना येऽर्थाः कथिताः त एव अर्थाः अस्य महात्मनो महानुभावस्य प्रकाशन्ते फलपर्यवसायिनो भवन्ति। यस्मादेवं तस्मात् विद्यार्थिभिः देवतादेशिकविषये निर्हेतुकी भक्तिः कर्तव्या,

परमाद्वैतविज्ञानं कृपया वै ददाति यः ।
सोऽयं गुरुवरः साक्षाच्छिव एव न संशयः ॥

इति स्मृतेः । द्विर्वचनमादरार्थम् । इत्युपनिषच्छब्दौ विशिष्टोपनिषत्समाप्त्यर्थौ ॥ २३ ॥

इति षष्ठाध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
श्वेताश्वतरोपनिषद्व्याख्येयं लिखिता स्फुटम् ।
श्वेताश्वतरोपनिषदो व्याख्याग्रन्थः सहस्रकम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुर्दशसङ्ख्यापूरकं श्वेताश्वतरोपनिषद्विवरणं सम्पूर्णम् ॥

———

# नामधेयपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# विशेषपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

B 31